॥ श्रीपद्मावतीनवरत्नमालिकास्तुतिः ॥
% १४
श्रीः ॥

श्रीमान् यस्याः प्रियस्सन् सकलमपि जगज्जङ्गमस्थावराद्यं
स्वर्भूपातालभेदं विविधविधमहाशिल्पसामर्थ्यसिद्धम् ।
रञ्जन् ब्रह्मामरेन्द्रैस्त्रिभुवनजनकः स्तूयते भूरिशो यः
सा विष्णोरेकपत्नी त्रिभुवनजननी पातु पद्मावती नः ॥ १॥

श्रीशृङ्गारैकदेवीं विधिमुखसुमनःकोटिकोटीरजाग्रद्-
रत्नज्योत्स्नाप्रसारप्रकटितचरणाम्भोजनीराजितार्चाम् ।
गीर्वाणस्त्रैणवाणीपरिफणित महाकीर्ति सौभाग्यभाग्यां
हेलानिर्दग्धदैन्यश्रमविषममहारण्यगण्यां नमामि ॥ २॥

विद्युत्कोटिप्रकाशां विविधमणिगणोन्निद्रसुस्निग्धशोभा-
सम्पत्सम्पूर्णहाराद्यभिनव विभवालङ्क्रियोल्लासिकण्ठाम् ।
आद्यां विद्योतमानस्मितरुचिरचितानल्पचन्द्रप्रकाशां
पद्मां पद्मायताक्षीं पदनलिननमत्पद्मसद्मां नमामि ॥ ३॥

शश्वत्तस्याः श्रयेऽहं चरणसरसिजं शाङ्गपाणेः पुरन्ध्र्याः
स्तोकं यस्याः प्रसादः प्रसरति मनुजे क्रूरदारिद्र्यदग्धे ।
सोऽयं सद्योऽनवद्यस्थिरतररुचिरश्रेष्ठभूयिष्ठनव्य-
स्तव्यप्रासादपङ्क्तिप्रसितबहुविधप्राभवो बोभवीति ॥ ४॥

सौन्दर्योद्वेलहेमाम्बुजमहितमहासिंहपीठाश्रयाढ्यां
पुष्यन्नीलारविन्दप्रतिमवरकृपापूरसम्पूर्णनेत्राम् ।
ज्योत्स्नापीयूषधारावहनवसुषमक्षौमधामोज्ज्वलाङ्गीं
वन्दे सिद्धेशचेतस्सरसिजनिलयां चक्रिसौभाग्यऋद्धिम् ॥ ५॥

संसारक्लेशहन्त्री स्मितरुचिरमुखीं सारशृङ्गारशोभां
सर्वैश्वर्यप्रदात्रीं सरसिजनयनां संस्तुतां साधुबृन्दैः ।
संसिद्धस्निग्धभावां सुरहितचरितां सिन्धुराजात्मभूतां
सेवे सम्भावनीयानुपमितमहिमां सच्चिदानन्दरूपाम् ॥ ६॥

सिद्धस्वर्णोपमानद्युतिलसिततनुं स्निग्धसम्पूर्णचन्द्र-
व्रीडासम्पादिवक्त्रां तिलसुमविजयोद्योगनिर्निद्रनासाम् ।
तादात्वोत्फुल्लनीलाम्बुजहसनचणात्मीयचक्षुः प्रकाशां
बालश्रीलप्रवालप्रियसखचरणद्वन्द्वरम्यां भजेऽहम् ॥ ७॥

यां देवीं मौनिवर्याः श्रयदमरवधूमौलिमाल्यार्चिन्ताङ्घ्रिं
संसारासारवारांनिधितरतरणेतरणतरिं सर्वदा भावयन्ते ।
श्रीकारोत्तुङ्गरत्नप्रचुरितकनकस्निग्धशुद्धान्तलीलां
तां शश्वत्पादपद्मश्रयदखिलहृदाह्लादिनीं ह्लादयेऽहम् ॥ ८॥

आकाशाधीशपुत्रीं श्रितजननिवहाधीनचेतःप्रवृत्तिं
वन्दे श्रीवेङ्कटेशप्रभुवरमहिषीं दीनचित्तप्रतोषाम् ।
पुष्यत्पादारविन्दप्रसृमरसुमहश्शामितस्वाश्रिन्तान्त-
स्तामिस्रां तत्त्वरूपां शुकपुरनिलयां सर्वसौभाग्यदात्रीम् ॥ ९॥

श्रीशेषशर्माभिनवोपक्लृप्ता
प्रियेण भक्त्या च समर्पितेयम् ।
पद्मावतीमङ्गलकण्ठभूषा
विराजतां श्रीनवरत्नमाला ॥ १०॥

इति श्रीपद्मावतीनवरत्नमालिकास्तुतिः समाप्ता ॥